तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका
आगस्ट् - २०२४ रू. २०/-



SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 05
August 2024, Price Rs.20/-
No. of pages-24

प्रसीद मे महालक्ष्मी! सुप्रसीद महाशिवे।
अचला भव सम्प्रीत्या सुस्थिराभव मद्गृहे।।

वरलक्ष्मीव्रतम् - 16-08-2024



19-06-2024 तः 21-06-2024 पर्यन्तं तिरुमलक्षेत्रे आयोजितश्रीवारिज्येष्ठाभिषेकमहोत्सवदृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री जे.श्यामल राव्., ऐ.ए.एस्., दम्पती भागं गृहीतवन्तौ।



17-06-2024 तः 21-06-2024 पर्यन्तं तिरुचानूरुआलये आयोजित-श्रीपद्मावतीदेव्याः प्लवोत्सवदृश्यानि।



27-06-2024 तः 29-06-2024 पर्यन्तं तिरुचानूरुआलये आयोजितश्रीसुन्दरराजस्वामिनः अवतारोत्सवदृश्यानि।

# गीतामृतम्



श्रीभगवानुवाच -

अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि।।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते।।

(भगवद्गीता २.३३-३४)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - भगवान् उवाच - हे अर्जुन! इदं युद्धे तव धर्मतः प्राप्तम्। यतः भवान् क्षत्रियः इदं धर्म्यं युद्धं त्वं न करिष्यसि चेत् स्वधर्मत्यागात् कीर्तिः नश्यति। पापं प्राप्नोषि।सर्वाणि भूतानि तव अपकीर्तिं कथष्यन्ति। एकवारं कीर्तिं प्राप्तवतः अपकीर्तिः मरणादपि दुःखप्रदं भवति।



# सङ्कीर्तनम्

नवनीतचोर नमो नमो
नवमहिमार्णव नमो नमो ।।नव।।
हरिनारायण केशवाच्युत श्रीकृष्ण
नरसिंह वामन नमो नमो
मुरहर पद्मनाभ मुकुन्द गोविन्द
नरनारायणरूप नमो नमो ।।नव।।
निगमगोचर विष्णुनीरजाक्ष वासुदेव
नगधर नन्दगोप नमो नमो
त्रिगुणातीत देव त्रिविक्रम द्वारक-
नगराधिनायक नमो नमो ।।नव।।
वैकुण्ठ रुक्मिणिवल्लभ चक्रधर
नाकेशवन्दित नमो नमो
श्रीकर गुणनिधिश्रीवेङ्कटेश्वर
नाकजननुत नमो नमो ।।नव।।

(अन्नमाचार्यसङ्कीर्तनम्)

# अस्मान् मोचय शुभकल्पवल्ली

श्रावणमासस्य आगमनेन अस्माकं कृते उत्सवः अस्ति, परम्परागतरूपेण महिलाभिः आचरिताः सर्वे व्रताः अस्मात् मासात् आरभन्ते। ईश्वरस्य धर्मरूपेण उपासना एषा परम्परा अस्ति, याम् अद्यापि अस्माकं देशे महिलाः निर्वाहयन्ति। एतेषां व्रतानां पृष्ठतः अभिप्रायः न केवलं संस्कारे श्रद्धां भक्तिं च दर्शयितुं अपि तु दशजनैः सह स्वमैत्रीं सुखं च पालयितुं परिवारकल्याणं सार्वत्रिकसमृद्धिं च कामयति।

हिन्दूधर्मे श्रीलक्ष्मीं मङ्गलदेवता, मङ्गलसूत्रं च भारतीयस्त्रीणां कृते अतीव पवित्रम् अस्ति। देवी लक्ष्मी बालानाम् अध्यक्षदेवता अस्ति। श्रावणमासे इष्टार्थसिद्ध्यर्थं स्त्रियः वरलक्ष्मीदेव्याः पूजां कुर्वन्ति इति प्रथा अस्ति। लक्ष्मीरूपे प्रचुरसस्यानां पूजा क्रियते इति अपि परम्परा अस्ति। लक्ष्मीः माङ्गल्ये मुतैधूभिः स्वर्णरूपेण धार्यते। सा हरिद्रा-केसरयोः वर्णे अस्ति। देव्याः लक्ष्म्याः सर्वाभरणाय धनीनः नार्थः श्रीवरलक्ष्मी हरिद्रा सत्सांतनप्राप्त्यर्थं तथा सकलसौभाग्याय उपासनां कुर्वन्ति।

तत्र केचन देशस्य समृद्ध्यर्थं लक्ष्मीं पूजयन्ति। विजयनगरराज्यस्य स्थापनायाः उत्तरदायित्वेन ये विद्यारण्याः आसन् ते श्रीलक्ष्मीं ध्यात्वा सुवर्णवृष्टिं कृतवन्तः। आदिशङ्करः कनकधारस्तोत्रेण दरिद्राय निधिं दत्तवान् इति कथ्यते। जगन्नायक्याः देव्याः लक्ष्म्याः स्तुतिफलम् अनन्तम्। अपूर्वम्। महात्त्वपूर्णः स्तुवन्तं स्वकीयं करोति, अन्यान् सर्वान् कोल्वेट्टुं करोति। अस्मात् किं अधिकं समृद्धं गौरवपूर्णं च? मातुः पादपद्मसेवया सर्वं भद्रम्। शुभं, धर्मः, क्षेमं, शुभा, मोक्ष, आनन्दः, भाग्यम् - आदि सर्वं समृद्धिः एतानि सर्वाणि श्रीदेवीपदसेवापरिणामात् प्राप्यन्ते। अत एव श्रीसूक्ते 'त्वत्पादपद्मं मयि सन्निधत्स्व, ''मातः! मयि तव कमलपुष्पं स्थापयतु'' इति पार्थना सर्वाधिकं सार्थकं भवति। देवानां पादयोः विचारः पूजनं च मन्त्रशास्त्रस्य परम्परा अस्ति।

यस्मिन् गृहे देवी लक्ष्मीः प्रविष्टा अस्ति, तत्र सर्वाणि भद्राणि प्रचलन्ति।

# आगस्ट् -२०२४

सम्पुटिः-११ सञ्चिका-०५

श्रीक्रोधिसंवत्सरस्य आषाढकृष्णद्वादशी तः
श्रीक्रोधिसंवत्सरस्य श्रावणकृष्णत्रयोदशी पर्यन्तम्-१९४४



मुखचित्रम् - श्रीपद्मावतीदेव्याः, तिरुचानूरु।
अन्तिमरक्षापुटः- श्रीकृष्णस्वामिनः, (चित्रकारः - श्रीबालाजी श्रीनिवासन्)

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

## सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका







# गुरुतत्त्वम्

**अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।**
**अफाललोचनश्शम्भुः भगवान् बादरायणः।।**
**आपादमौलिपर्यन्तं गुरुणामाकृतिं स्मरेत्।**
**तेन विघ्नाः प्रणश्यन्ति सिद्ध्यन्ति च मनोरथाः।।**

वैष्णवानां विष्णुः देवः शैवानां महेश्वरः शाक्तिकेयानां पारशक्तिः देवतास्वरूपिणी किन्तु - योगिनां वेदान्तिनां च गुरुरेव सर्वदेवता स्वरूपः ''आदौ पूज्यो गणाधिपः'' इति प्रथमपूज्यगणाधिपतेः प्राक् (आदौ) आराधनीयो गुरुपरामात्मा एव। गुरुं गणपतिं च स्मृत्वा, इति गणपतिपूजापद्धत्या अवगम्यते। सद्गुरुबोधनया एव गणपतितत्त्वं ज्ञायते खलु।

**यस्य देवे पराभक्तिः यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।**

इति श्रुतिवचनमपि अत्र स्मर्तव्यम्।

यस्य देवे गुरौ च समानभक्तिभावना अस्ति, तस्य गुरुणा कथिताः समस्तविषयाः स्फुरिताः भवेयुः स्वस्वानुसन्धानभूताः भवेयुः इत्यर्थः। अतः श्रद्धाभक्तिभ्यां भगवतः निष्कामेन आराधनं कृतं चेत् सः देवदेवः एव साधकस्य चित्तस्य शुद्धिं कृत्वा तद्वारा ज्ञानम् अनुगृह्णाति। अतः श्रीगुरुः भगवान् च एकरूपेण आराधनीयौ इति फलितार्थः

**नारायणाखिलगुरो! भगवन् नमस्ते।**
**योगेश्वराखिलगुरो! भगवन् नमस्ते।।**

इति गजेन्द्रः कुन्तीमाता च श्रीमद्भागवते गुरुस्वरूपेणैव भगवतः सर्वसमर्पणभावेन प्रार्थनां कृत्वा कृतकृत्यौ अभवताम्।

**भगवदवतारप्रयोजनम् -**

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।**

इति शिष्टरक्षणंदुष्टशिक्षणम् एव। किन्तु सद्गुरुः दुर्जनानां मनसि स्थितं दुष्टत्वं निश्शेषेण निर्मूल्य सज्ञानान् इव परिणमय्य नूतनजीवनस्य सृष्टिः करोति अत एव ''गुरुर्ब्रह्मा'' इति गुरोः सृष्टिकर्त्रा ब्रह्मणा अभेदं प्रतिपादितं साक्षात् परमेश्वरेण गुरुगीतायाम्। अनेन सद्गुरोः अवतारप्रयोजनं किमिति चेत्। परित्राणाय साधूनां विनाशाय च दुष्कृताम् इति वक्तव्यम् -

**नरे रुष्टे नृपस्त्राता नृपे रुष्टे तु दैवतम् ।**
**दैवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।।**

इति प्रसिद्धश्लोकं सर्वे जानन्त्येव। अनेन सर्वेभ्यः अपि उपरि गुरुस्थानम् इति अवगम्यते।

परमात्मनः ज्ञानावतारेषु साक्षात् विष्णुरेव पराशरसत्यवत्योः पुत्ररूपेण आर्विभूतः। (व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे)

**श्रीमती ओरुगन्टि सीता**
**चरवाणी - ९३९३१२९८८६**

महाभागोऽयं वेदराशेः विभजनं कृत्वा, वेदव्यास इति नाम्ना प्रसिद्धिं प्राप्तवान्। अस्य महात्मनः जन्मतिथिः आषाढपौर्णमी व्यासपौर्णमीति अत्यन्तं पर्वदिनमिति निश्चप्रचम्। इदमेव गुरुपूर्णिमा इति नामान्तरेण विराजते। अपि च अयम् अष्टादशपुराणकर्ता ''व्यासोच्छिष्टं जगत् सर्वम्'' इति पण्डितप्रकाण्डानां वचनमपि सुप्रसिद्धम्। एतानि पुराणानि मान्यसामान्यानां सर्वेषां जनानाम् उपदेशकारकाणि (वेदार्थप्रतिपादकानि)। ''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'' इति प्राचीनोक्तिः।यद्यार्थप्रवणात् पुराणवचनात् इष्टं सुहृत् संमितात् इति प्रतापरुद्रीये विद्यानाथेन प्रतिपादितम्। पुराणानि मन्त्राः इव सन्मार्गबोधकानि इत्यर्थः। अनेन व्यासमहर्षिणा - भगवद्गीता, अष्टावक्र गीता, अवधूतगीता (भागवतमाहपुराणे यद् अवधूतसंवादात्मकम्) इतिवत् गुरोः परिपूर्णमहत्त्वप्रतिपादनार्थं शिवशक्तिसंवादात्मकरूपेण स्कान्दपुराणे गुरुगीता लोकोपकारार्थं विरचिता। इदानीम् अत्र द्वौ वा त्रयो वा श्लोकान् पश्यामः।

**अज्ञानार्तिहरं चैव जन्मकर्मनिवारणम्।**
**ज्ञानविज्ञानसिद्ध्यर्थं गुरोः पादोदकं पिबेत्।**

ज्ञानविज्ञानप्राप्त्यर्थं गुरुपादोदकं (पादतीर्थम्) भक्त्या स्वीकरणीयम्। इदं पादोदकम् अस्माकम् अनेकजन्मतः आगतानि वर्तमानानि च कर्माणि निश्शेषेण नाशयित्वा देहेन्द्रियादिषु नित्यत्वरूपम् अज्ञानं नाशयति। ज्ञानं नाम परोक्षज्ञानम्। विज्ञानं नाम अपरोक्षज्ञानम् आत्मानुभवः इत्यर्थः। ''ज्ञानादेव कैवल्यम्'' इति उपनिषद्वचनं खलु। अतः मानवैः एतदर्थमेव अवश्यम् अहर्निशं प्रयत्नः कर्तव्यः। ''ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति।'' इति महादेव एव भिक्षाम् ऐच्छत्। किमुत? मानवमात्राणां अस्माकम् कथा?

**न गुरोराधिकं तत्त्वं न गुरोरधिकं तपः।**
**गुरुज्ञानात् परं तत्त्वं तस्मै श्रीगुरवे नमः।।**

गुरोः परतत्त्वं नास्ति गुरुदेवस्य चित्स्वरूपस्य परमात्मनः च भेदः नास्ति इत्यर्थः, गुरुभक्तेः उत्तमं तपः नास्ति। श्रीगुरोः उपदेशेनैव 'ब्रह्म सत्यं जगन्मिथ्य' इति सत्पदार्थज्ञानं प्राप्नोति। अतः तस्मै शोभायुक्त गुरुदेवाय नमः इति भावः। दीर्घकालं श्रीगुरुपरमात्मानं ध्यात्वा ध्यात्वा गुरोः अनुग्रहेणैव ब्रह्मा स्वस्य रजोगुणेन समस्तसृष्टिकार्यं करोति, विष्णुः स्वस्य सत्त्वगुणेन विश्वस्य गोप्ता अभूत्। तथैव परमेश्वरः स्वस्य तमोगुणेन एतत् - दृश्यमान प्रपञ्चस्य सर्वस्य लयं करोति। एवं प्रकारेण त्रिमूर्तयः श्रीसद्गुरुकृपाकटाक्षेणैव स्वस्वकार्यनिर्वहणे समर्थाः भवन्ति इति तात्पर्यम्। अस्मिन् सन्दर्भे ''तनीयांसुं पासुं तव चरणपङ्केरुहभवम्'' इति श्रीशङ्करभगवत्पादविरचितायां सौन्दर्यलहर्यां द्वितीयश्लोकः स्मरणीयः अपि च ''ललितासहस्रनामसु विराजिताः गुरुमण्डलरूपिणी, गुरुमूर्तिः'' इत्यादयश्च। अतएव

**यदङ्घ्रिकमलद्वन्दं द्वन्द्वतापनिवारकं।**
**तारकं भवसिन्धोश्च श्रीगुरुं प्रणमाम्यहम्।।**

यस्य सद्गुरोः कमले इव निर्मलै पादौ अस्माकं द्वन्द्वस्य नाशनं कृत्वा जननमरणादि संसारसागरं तर्तुं ददाति सामर्थ्यं ददाति तं श्रीगुरुं प्रणमामि अहम्। अत्र प्रकृष्टेन नमामि इति प्र उपसर्गात् अनन्यभक्त्या विनयेन च नमामि इत्यर्थः। अनेन प्रकारेण साक्षात् परमेश्वर एव पार्वती प्रति गुरुगीतायाः उपक्रमे (उपदेशप्रारम्भे इत्यर्थः) अहं प्रणमामि इति सद्गुरुं प्रति नमस्कारं कृतवान्। अनेन पूर्वोक्तपरिशीलनेन त्रिमूर्त्यतीतपरशक्त्यभिन्न सर्वप्रथमः सगुणसाकाररूपमेव सद्गुरुतत्त्वम् इति ज्ञायते।

**धन्या माता पिता धन्यो धन्यो वंशः कुलं तथा।**
**धन्या च वसुधादेवी, गुरुभक्तिस्सुदुर्लभा।।**

इति शम्

गुरुपूर्णिमां स्मृत्वा समर्पितमिदम् अक्षरपुष्पम् श्री वेङ्कटेश्वरस्वामिचरणरेणुः।





# वरलक्ष्मीव्रतम्

- डा.के.सूर्यनारायण रेड्डि
चरवाणी - ८१०६५७८२५०

भारतदेशे सर्वेषु व्रतेषु वरलक्ष्मीव्रतम् अत्यन्तप्रभावोपेतं पुण्यव्रतम्। पौर्णम्याः पूर्वं शुक्रवासरे (आगस्ट् मासे 16) आचर्यमाणव्रतं वरलक्ष्मीव्रतम्। स्त्रियः वरलक्ष्मीपूजया अष्टैश्वर्याणि आयुरायोग्यादीनि नित्यसुमङ्गलीत्वं च प्राप्स्यन्ति। सकलसम्पत्प्रदात्री महालक्ष्मीः श्रीसूक्ताधिदेवता भवति। वेदोक्त अदितिदेवमाता इयमेव। सौभाग्याधिष्ठानदेवतेयं प्रकृतिस्वरूपिणीति श्रीसूक्तोक्तिः। धर्मपरिरक्षकस्य महाविष्णोः अर्धाङ्गिनीयं महोन्नतलक्षणान्विता स्वकृपादृष्ट्या सर्वाभीष्ट धैर्यशौर्यसाहसविद्याविज्ञानपुत्रपौत्रदीर्घायुःप्रदात्री राराजते।

पुण्यस्त्रीभिः धनलक्ष्म्याः अस्याः अनुग्रहार्थं श्रावणे मासे वरलक्ष्मीव्रतमवश्यं आचरणीयम्। सुवासिनीभिः आदौ गणपतिपूजानन्तरं कलशपूजा, ततः वरलक्ष्म्याः आवहानं, ततः षोडशोपचारपूजा ततः लक्ष्मीसहस्रनामपठनं कृत्वा मधुरपदार्थमिश्रितं नैवेद्यं समर्पणीयम्। अस्मिन् व्रते तोरं - पूजा अत्यन्तं प्राधान्यं वहति। स्त्रियः नवसूत्रसंधबद्धे नवसु प्रदेशेषु ग्रन्थिं कृत्वा पञ्च अथवा नवविधपत्रपुष्पसंयुक्त - तोरं दक्षिणहस्तारभ्भे बद्ध्वा वरलक्ष्मीं पूजयन्ति।

**बध्नामि दक्षिणहस्ते नवसूत्रं शुभप्रदम्।**
**पुत्रपौत्राभिवृद्धिं च आयुष्यं देहि मे रमे।।**

नवविभागसूत्रावृतिः मम दक्षिणहस्ते धृता, मम आयुरारोग्यपुत्रपौत्राभिवृद्धिं प्रसादय इति लक्ष्मीप्रार्थना कर्तव्या। तदा परस्परवायनानि सुमङ्गलिन्यः ददति। ततः नववस्त्रं लक्ष्मीपुरतः निक्षिप्य पूजानन्तरं स्वयमेव धरन्ति।

कदाचित् पार्वती भर्तारं शिवं ''केन केन व्रतेन सर्व - सौभाग्यसकलसम्पत्पुत्रपौत्रादिसुखप्राप्तिः स्यादिति पप्रच्छ। तदा शिवः श्रावणमासे पौर्णमीपूर्वशुक्रवासरे वरलक्ष्मीव्रतमाचरणीयमिति तद्विधानमपि विशदीचकार।

पुरा मगधदेशे कुण्डिनपट्टणे चारुमती नाम सुमङ्गलिनी प्रत्यहं प्रातः एव नित्यकृत्यानि निर्वर्त्य मितभाषिणी सती, महतामुपचारं कुर्वन्त्यासीत्। तद्भक्त्या प्रसन्ना लक्ष्मीः स्वप्ने ''हे चारुमति! श्रावणमासे पौर्णमीपूर्वशुक्रवासरे मां पूजितासि अभीष्टं वरं वृणीष्वेति प्रोवाच। चारुमती स्वप्नदृष्टां वरलक्ष्मीं



बहुधा स्तुत्वा भर्तारं सखीश्च स्वप्नोदन्तं प्रोक्तवती। ततः सर्वाः स्त्रियः शास्त्रोक्तप्रकारं वरलक्ष्मीं पूजयामासुः। पुरोहिताय वायनं दक्षिणताम्बूलं दत्वा आशिषं प्राप्य लक्ष्मीदेवीप्रसादं स्वीचक्रुः। तदारभ्य चारुमत्या सह व्रतभागस्वामिन्यः स्त्रियः धनकनकवस्तुवाहनपुत्रपौत्रादिभिः सुखं जीवन्तीति शिवः चारुमतीकथां अपूरयत्। याः स्त्रियः भर्तारं त्रिकरणशुद्ध्या समाराधयन्ति तासां गृहे लक्ष्मी स्थास्यति। हरिद्राकुङ्कुमाक्षीरपुष्पदीपद्वारगोधनधान्य दैवाराधनवेदपठनप्रदेशाः लक्ष्मीनिवासस्थानानि। श्रावणशुक्रवासरे तुलसीपूजां कृत्वा क्षीरमध्वादिभिः लक्ष्मीविग्रहाभिषेकः कृतश्चेत् अभीष्टसिद्धिः स्यादिति पुराणोक्तिः। दक्षिणभारते वरलक्ष्मीव्रतम् अत्यन्तं लोकप्रियं भवति। तिरुचानूरुपद्मावतीमन्दिरे वरलक्ष्मीव्रतदिने पद्मावतीं महासौन्दर्योपेततया अलङ्कृत्य अनेक संख्याकभक्तजनानां पद्मावतीदर्शनं कारयित्वा देव्यभीष्टसिद्धये उपकुर्वन्ति। क्षीर-सागरमथने अन्यामूल्यरत्नैस्साकं लक्ष्मीः प्रादुर्बभूव। सैवलक्ष्मीरेव वरलक्ष्मीः। भगवान् विष्णुः प्रपञ्चसुखशान्त्यर्थं वरलक्ष्मीं पत्नीरूपेण स्वीकृत्य स्ववक्षःस्थले तस्याः स्थानं ददौ।

लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीम्
दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुराम्।
श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधराम्
त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम्।।

वरलक्ष्मी नमस्तुभ्यं भावजजनकप्राणवल्लभे
सुवर्णाभे भानुकोटिसमानप्रभे भक्तसुलभे
सेवकजनपालिनि श्रितपङ्कजभासिनि
केवलगुणशालिनि केशवहृद्वासिनि
श्रावणपौर्णमीपूर्वस्थशुक्रवार
चारुमतीप्रभृतिभिः पूजिताकारे
देवादिगुरुगुहसमर्पितमणिमयहारे
दिनदिनसंरक्षणनिपुणकनकधारे
भावनाभेदचतुरे भारतीसन्नुतवरे
कैवल्यविलासपरे काङ्क्षितफलप्रदकरे।





# जटायुशौर्यम्

सा गृहीताऽतिचुक्रोश रावणेन यशस्विनी।
रामेति सीता दुःखार्ता रामे दूरगते वने ॥१॥

सा तदा करुणा वाचो विलपन्ती सुदुःखिता।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥२॥

जटायो पश्य मामार्य ह्रियमाणामनाथवत्।
अनेन राक्षसेन्द्रेणाकरुणं पापकर्मणा ॥३॥

तं शब्दमवसुप्तस्तु जटायुरथ शुश्रुवे।
निरैक्षद् रावणं क्षिप्रं वैदेहीं च ददर्श सः ॥४॥

ततः पर्वतशृङ्गाभस्तीक्ष्णतुण्डः खगोत्तमः।
वनस्पतिगतः श्रीमान्व्याजहार शुभां गिरम्॥५॥

निवर्तय मतिं नीचां परदाराभिमर्शनात्।
न तत्समाचरेद्धीरो परो यद्धि विगर्हयेत्॥६॥

वृद्धोऽहं त्वं युवा धन्वी सरथः कवची शरी।
तथाप्यादाय वैदेहीं कुशली न गमिष्यसि ॥७॥

तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः।
चकार बहुधा गात्रे व्रणान्पतगसत्तमः ॥८॥

ततोऽस्य सशरं चापं मुक्तामणिविभूषितम्।
चरणाभ्यां महातेजा बभञ्ज पतगोत्तमः ॥९॥

ततः क्रोधाद्दशग्रीवो गृध्रराजमपोथयत्।
पक्षौ पार्श्वौ च पादौ च शङ्गमुद्धृत्य सोऽच्छिनत् ॥१०॥

स छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा।
निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥११॥



सनातनहैन्दवसाम्प्रदाये गोः विशेषस्थानं वर्तते। गोमाता इति स्थूलदेवतास्वरूपम्। ये मातरं गां पूजयन्ति तेषां सुपुत्रः, सौभाग्यं, ज्ञानं, मोक्षः च प्राप्यते। राहुग्रहस्य अध्यक्षा देवता गौः। अतः गोपूजा विश्वदुःखनिवारका। अतः गोकुलाष्टमीसन्दर्भे 'गोपूजाविधानम्' सप्तगिरिपाठकानां कृते...



# गोपूजा विधि

नोट : गोपूजा व्यक्तिगतरूपेण वा मूर्तिरूपेण वा निम्नलिखितरूपेण कर्तुं शक्यते। (प्रथमं दीपं प्रार्थयतु। पिडपगोमतं एवं प्रार्थयतु) गच्छ प्रार्थयतु।

गोमाता प्रार्थना

॥श्लो॥ नमो ब्रह्मण्यदेवाय, गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥

॥श्लो॥ घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवः।
घृतनद्यो घृतावर्तः, ता मे सन्तु सदा गृहे॥

॥श्लो॥ नित्यं गावः प्रस्तता एवेचा सह गावो ममगरा।
गावो मे सर्वतश्चैव गावं मधे वहाम्यहम्॥

(एवं प्रार्थनां कृत्वा आचमनं कृत्वा प्राणायामं सङ्कल्पम् अर्थात् देशकालादिकं पठित्वा गोत्रनामादिकं वदन्तु)
"मम श्रुतिस्मृतिपुराणोक्तसर्वफल प्राप्त्यर्थं सर्वापदः परिहारर्थं ज्ञानप्राप्तिद्वारा मोक्षफलावप्त्यर्थम्, अखण्डितसुखसौभाग्यसंथा त्यारोग्यैश्वर्याभिवृद्ध्यर्थं, कल्पोक्तप्रकारेण गोपूजां करिष्ये॥"
(अथ कलशपूजां गणपतिपूजां च कारयेत्)
(गणपतिं पूजयित्वा पुष्पाक्षतमादाय गोपदाभ्यां पुष्पाक्षतैः सह प्रणम्य।)

ध्यानं

॥श्लो॥ नमो गोभ्यः श्रीमतिभ्यः सौरभेयिभ्य एव च।
॥श्लो॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च॥
श्रीगोमात्रे नमः ध्यानं समर्पयामि।

आवाहनम्

॥श्लो॥
आगच्छ देवि कल्याणि! शुभं पूजां गृहाण च।
वत्सेन साहित्यं त्वा-हम देवीमावाहयाम्यहम्॥
श्रीगोमात्रे नमः आवाहनं समर्पयामि।

(एवं वदन् पुष्पाणि निवेदितव्यानि प्रणतव्यानि च)

आसनम्

॥श्लो॥ नानारत्नसंयुक्तं कार्तेश्वरविभूषितम्।
आसनं ते मया दत्तं गृहाण जगदम्बिके॥
श्रीगोमात्रे नमः दिव्यसिंहासनं समर्पयामि।
(कहना, पुष्प अर्पित कर प्रणाम करना चाहिए।)

॥श्लो॥ सौरभे! सर्वम्! पवित्रे! पापनाशिनि!
गृहण यन्मया दत्तं पाद्यं त्रैलोक्यवन्दिते!
श्रीगोमात्रे नमः पाद्यं समर्पयामी।
(एवं वदन् निःश्वासेन घटात् जलं गृहीत्वा गोपादान् प्रक्षाल्य)।

अर्घ्यं

॥श्लो॥ सर्वदेवमये! देवि! सर्वतीर्थमये! शुभे!
गृहाणार्घ्यं मया दत्तं सौरभेयि! नमोस्तुते!
श्रीगोमात्रे नमः अर्घ्यं समर्पयामि।
(मूत्रं उद्धारिण्या सह गृहीत्वा अर्घ्यपात्रे त्यक्तं करं प्रक्षालितम् इति कल्पयित्वा)।

आचमनम्

॥श्लो॥ देहस्थितास्थि रुद्राणी शंकरस्य सदा प्रिये।
धेनुरूपेण सा देवी मम पापं व्यपोहतु॥
श्रीगोमात्रे नमः मुखे आचमनीयं समर्पयामि।
(वदन् गोमुखं त्रिवारं दर्शयित्वा अर्घ्यपात्रे पातयेत्)

स्नानं

॥श्लो॥ **या लक्ष्मीः सर्वलोकेषु या देवेष्ववस्थिता।**
**धेनुरुपेण सा देवी मम पापं व्यपोहतु॥**

श्रीगोमात्रे नमः स्नानं समर्पयामि।

(एवं वदन् गोदेवी स्नातव्या।) (यदि सम्भवं चेत् "श्रीसूक्तम्" इति पाठः अभिषेकं च भवेत्।)

वस्त्रं

॥श्लो॥ **अच्छादनं गवे दद्यां सम्यक् शुद्धं सुशोभनम्।**
**सुरभिवस्त्रदानेन प्रेयथं परमेश्वरी।**

श्रीगोमात्रे नमः वस्त्रं समर्पयामि।

(वदन्, गोशरीरं पुच्छं वस्त्रेण आवृत्य।)

चन्दनम्

॥श्लो॥ **सर्वदेवमये देवि! चन्दन चन्द्रसन्निभम्।**
**कस्तूरीकेसरं च प्रतिगृह्यतां सुगन्धितम्॥**

श्रीगोमात्रे नमः दिव्यपरिमलश्रीचन्दनं समर्पयामि।

(तत् वदन् चन्दनं स्थापयित्वा कुङ्कुमं स्थापयित्वा) पादयोः, मुखे, शृङ्गे, कुब्जे, पुच्छाग्रे च)

अक्षाः

॥श्लो॥ **सत्यं शचन्द्रवर्णश्च, हरिद्रामिश्रितान् शुभान्।**
**अक्षतं शरपये तुभ्यं गृहाण जगदम्बिके॥**

श्री गोमात्रे नमः अक्षतन समर्पयामि अलङ्कृत।

(अक्षान् गोधनुेषु स्थापयित्वा)।

पुष्पमाला

॥श्लो॥ **तुलसी कुण्डमण्दार पारिजाताम्बुजैर्युतम्।**
**वनमालां प्रदास्यामि, गृहाण जगदीश्वरी॥**

श्रीगोमात्रे नमः पुष्पमालिकां समर्पयामि। (पुष्पाणि स्थापयित्वा गोधनुः) (अनन्तरं गोमातृशरीरे तत्तद्देवतान् चिन्तयित्वा अङ्गपूजं कर्तव्यम्)।

(गोः सर्वाङ्गेषु देवताहवानम्)

गोपूजाङ्गत्वेन गोः अङ्गेषु सर्वान् देवान् आवाहयामि

शृङ्गमूलयोः - ब्रह्म-विष्णुं आवाहयामि (प्रथम शृङ्ग)

शृङ्गग्रेः - सर्वतीर्थानि आवाहयामि (शृङ्गान्तः)

ललाटे - ललाटे महादेवम् आवाहयामि (सुदुरु)

ललाटाग्रे - महादेवम् आवाहयामि (ललाटस्य उपरिभागः)

नासादण्डे - षण्मुखं आवाहयामि (नासिकाग्राः)

कर्णयोः - अश्विनौ आवाहयामि (कर्ण)

चक्षुशोः - शशिभास्करौ आवाहयामि (नेत्र)

जिह्वायम् - वरुणम् आवाहयामि (जिह्वा)

हुंकारे - सरस्वतीम् आवाहयामि (ईमानदार)

गण्डयोर्मध्ये - धर्मम् आवाहयामि (दुवडा)

ओष्ठयोः - गोधूलिं आवाहयामि

ग्रीवायम् - इन्द्रम् आवाहयामि (गले)

कुक्षिदेशे - रक्षांसी आवाहयामि (उदर)

उरासि - साध्यान् आवाहयामि (वक्षःस्थलप्रदेशः)

चतुष्पदेषु - धर्मम् आवाहयामि (चतुर्पाद)

खुरामध्ये - गन्धर्वान् आवाहयामि (खुरान्तर)

खुराग्रे - पन्नगान् आवाहयामि (एडि अग्रभाग)

खुरा पार्श्वेषु - अप्सरसः आवाहयामि(पार्ष्णिपक्ष)

पृष्ठे - एकादशरुद्रान् आवाहयामि (पृष्ठान्त)

सर्वसन्धिषु - वनून् आवाहयामि (अङ्गसंधु)

श्रोनितटे - पीठना आवाहयामि (नितम्ब)

लाङ्गुले - सोमम् आवाहयामि(पुच्छ)

वलारोमेशु - आदित्यरश्मीन् आवाहयामि (पुच्छ पिन)

मुतेरे गङ्गाम् आवाहयामि (पश्चिताम्)

क्षीरे - सरस्वतीम् आवाहयामि (दुग्ध)

दधनी - नर्मदाम् आवाहयामि (दधि)

सुरफिशी - हुतासनम् आवाहयामि (नेई)

रोमषु - त्र्यस्त्रिमशत्कोटिदेवान् आवाहयामि (रोम)

उदर - पृथिवीम् आवाहयानि (पेट)

पयोधरेषु - सागरान् आवाहयामि (उष्मायन)

गोः सर्वाङ्गेषु सर्वान् देवान् आवाहयामि

पश्चात् - अङ्गपूजा

नन्दिन्यै नमः - गोः पौदौ पूजयामि

जगदुत्पत्तिकारणायै नमः - गोः जानुनी पूजयामि

जगद्रक्षणायै नमः - गोः कटिं पूजयामि

पवित्रायै नमः - गोः कण्ठं पूजयामि

सुशीलायै नमः - गोः शृंगे पूजयामि

यज्ञसाधनायै नमः - गोः मुख पूजयामि

विश्वस्याघप्रणाशिन्यै नमः - गोः शिरः पूजयामि

(गोपनाम्ना गोप्या पूजयेत् तत्)

॥श्लो॥

**तुलसीकुन्दमन्दारजातिपुन्नागचम्पकैः।**
**कदम्बकरवीरैश्चकुसुमैशातापत्रकैः॥**

॥श्लो॥

**नीलाम्बुजैः बिल्वपत्रैः चम्पकैः रुद्र रुपिणी।**
**पूजमियाम्यहं भक्त्यासंग्रह नच्युतर्चि॥**

श्रीगोमात्रे नमः पत्र-पुष्पेह पूजयामी (गोमाता गुप्त नाम पाठ कर पत्र पुष्प से गोमाता पूजन।)



# गो रहस्य नामावली

ॐ श्रीकृष्णवल्लभायै नमः
ॐ कृष्णायै नमः
ॐ श्रीकृष्णपारिजातायै नमः
ॐ कृष्णप्रियायै नमः
ॐ कृष्णरूपायै नमः
ॐ कृष्णप्रेमविवर्धिन्यै नमः
ॐ कमनीयायै नमः
ॐ कामधेनवे नमः
ॐ कल्याण्यै नमः
ॐ कल्पवन्दितायै नमः 10
ॐ कल्पवृक्षस्वरूपायै नमः
ॐ दिव्यकल्पसमलङ्कृतायै नमः
ॐ क्षीरार्णवसुसम्भूतायै नमः
ॐ क्षीरदायै नमः
ॐ क्षीररूपिण्यै नमः
ॐ नन्दादिगोपविनुतायै नमः
ॐ नन्दिन्यै नमः
ॐ नन्दनप्रदायै नमः
ॐ ब्रह्मानन्दविदायिन्यै नमः
ॐ सर्वदेवगणस्तुतायै नमः 20
ॐ सर्वधर्मस्वरूपिण्यै नमः
ॐ सर्वभूतावनरतायै नमः
ॐ सर्वदायै नमः
ॐ सर्वमोददायै नमः
ॐ शिष्टेष्टायै नमः
ॐ शिष्टवरदायै नमः
ॐ सृष्टिस्थितिलयात्मिकायै नमः
ॐ सुरभ्यै नमः
ॐ सौरभेय्यै नमः
ॐ सुरासुरनमस्कृतायै नमः 30
ॐ सिद्धिप्रदायै नमः
ॐ अभीष्टसिद्धिप्रवर्षिण्यै नमः
ॐ जगद्धितायै नमः
ॐ ब्रह्मपुत्र्यै नमः
ॐ गायत्र्यै नमः
ॐ एकहायन्यै नमः
ॐ गन्धर्वादिसमाराध्यायै नमः
ॐ राधाहस्तोपलालितायै नमः
ॐ यज्ञाङ्गायै नमः
ॐ यज्ञफलदायै नमः 40
ॐ यज्ञेश्वर्यै नमः
ॐ यज्ञरूपिण्यै नमः
ॐ हव्यकव्यप्रदायै नमः
ॐ श्रीदायै नमः
ॐ स्तव्यभव्यक्रमोज्ज्वलायै नमः
ॐ ऋद्धिदायै नमः
ॐ बुद्धिदायै नमः
ॐ बुद्ध्यै नमः
ॐ धनधान्यविवर्धिन्यै नमः
ॐ यशोदायै नमः 50
ॐ सुयशःपूर्णायै नमः
ॐ यशोदानन्दवर्धिन्यै नमः
ॐ धर्मज्ञायै नमः
ॐ धर्मविभवायै नमः
ॐ धर्मरूपतनूरुहायै नमः
ॐ विष्णुपादोद्भवीप्रख्यायै नमः
ॐ वैष्णव्यै नमः
ॐ विष्णुरूपिण्यै नमः
ॐ वसिष्ठपूजितायै नमः
ॐ शिष्टायै नमः 60
ॐ शिष्टेष्टायै नमः
ॐ शिष्टकामधुहे नमः
ॐ दिलीपसेवितायै नमः
ॐ दिव्यायै नमः
ॐ खुरपावितविष्टपायै नमः
ॐ रत्नाकरसमुद्भूतायै नमः
ॐ रत्नदायै नमः
ॐ शक्रपूजितायै नमः
ॐ पीयूषवर्षिण्यै नमः
ॐ पुण्यायै नमः 70
ॐ पुण्यापुण्यफलप्रदायै नमः
ॐ पयःप्रदायै नमः
ॐ घृतदायै नमः
ॐ घृतसम्भवायै नमः
ॐ कार्तवीर्यार्जुनमृतिहेतवे नमः
ॐ हेतुकसन्नुतायै नमः
ॐ जमदग्निकृताजस्रसेवायै नमः
ॐ सन्तुष्टमानसायै नमः
ॐ पादरेणुपालित भूतलायै नमः
ॐ सवत्सायै नमः 80
ॐ वत्सकारातिपालितायै नमः
ॐ भक्तवत्सलायै नमः
ॐ वृषदायै नमः
ॐ कृषिदायै नमः
ॐ हेमशृङ्गाग्रतलशोभितायै नमः
ॐ भव्यायै नमः
ॐ भावितायै नमः
ॐ भवनाशिन्यै नमः
ॐ भक्तिमुक्तिप्रदायै नमः
ॐ कान्तायै नमः 90
ॐ कान्ताजनशुभङ्कर्यै नमः
ॐ सुरूपायै नमः
ॐ बहुरूपायै नमः
ॐ अच्छायै नमः
ॐ कर्बुरायै नमः
ॐ कपिलायै नमः
ॐ अमलायै नमः
ॐ साधुशीलायै नमः
ॐ साधुवृन्दनिषेवितायै नमः
ॐ सर्ववेदमय्यै नमः 100
ॐ सर्वदेवरूपायै नमः
ॐ प्रभावत्यै नमः
ॐ वसूनां दुहित्रे नमः
ॐ रुद्रमात्रे नमः
ॐ आदित्य सहोदर्यै नमः
ॐ तुष्ट्यै पुष्ट्यै नमः
ॐ स्वधायै नमः
ॐ मेधायै नमः
ॐ बुद्ध्यै नमः
ॐ सिद्ध्यै नमः 110
ॐ स्मृत्यै नमः
ॐ धृत्यै नमः
ॐ कान्त्यै नमः
ॐ लक्ष्म्यै नमः
ॐ महामायायै नमः
ॐ महादेवादिवन्दितायै नमः
ॐ तीर्थस्वरूपायै नमः
ॐ देवेश्यै नमः
ॐ लोकानां मलहारिण्यै नमः
ॐ जाह्नव्यै नमः 120
ॐ यमुनायै नमः
ॐ गोदायै नमः
ॐ सूर्यपुत्र्यै नमः
ॐ सरस्वत्यै नमः
ॐ योगानन्दायै नमः
ॐ योगसिद्धिप्रदायै नमः
ॐ योगिसेवितायै नमः
ॐ श्रीकर्यै नमः
ॐ श्रीमत्यै नमः
ॐ श्रीदायै नमः 130
ॐ श्रीमद्गोलोकवल्लभायै नमः
ॐ श्रीगोमात्रे नमः 132

श्री गोमात्रे नमः नानाविध पुष्पाणि समर्पयामि
(तदनन्तर धूप-दीप, नैवेद्यों को समर्पित करना है।)

धूप

॥श्लो॥ देवद्रुमरसोद्भूतो गोघृतेन समन्वितः।
प्रयच्छामि महाभागे! धुपोऽयं प्रतिगृह्यताम्॥
श्री गोमात्रे नमः धूपं आघ्रायामी

दीपः

(त्रयः विटाः प्रज्वलिताः प्रज्वलिताः च। द्वे विटाः न वैज्ञानिकाः)

॥श्लो॥ आनन्दकृत्सर्वलोके देवानाश्च सदाप्रियः।
गौस्त्वं पाहि जगन्मातः दीपोऽयं प्रतिगृह्यताम्॥
श्रीगोमात्रे नमः घृतवर्ती दीपम् दर्शयामि।

अर्पणम् (तृणं पोषयितुं)

॥श्लो॥ सुरभिस्त्वां जगन्मातः देवी! विष्णुपदे स्थिता।
सर्वदेवमये ग्रासं मयादत्तमीमां गृहाण॥
श्री गोमात्रे नमः ग्रास नैवेद्यं समर्पयामि।

॥श्लो॥ कृशराझंसमायुक्तं गोघृतेनपरिप्लुथम्।
नैवेद्यश्च मया दत्तं सुरभिः प्रीयतामिति॥
श्रीगोमात्रे नमः कृष्णाय समर्पयामि।

ताम्बूलम्

॥श्लो॥ पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्।
सौरभेयि! नमस्तुभ्यं तांबूलम् प्रतिगृह्यताम्॥
श्रीगोमात्रे नमः ताम्बूलं समर्पयामि।

नीराजनम्

(हारतिः कर्पूरं योजयित्वा पश्च घृतवटानां प्रयोगं कुर्यात्)

॥श्लो॥ नीराजनं गृहाणेदं पश्चवर्ती समन्वितम्।
तेजोराशमयं दत्तं गृहाण त्वं सुरेश्वरी॥
श्रीगोमात्रे नमः कर्पूरनीराजनं समर्पयामि।
नीरजनानन्तरं शुद्धाचमनीयं समर्पयामि।



पुष्पांजलि

पुष्पञ्जलिः (पुष्पाणि निक्षिप्य निम्नलिखितश्लोकान् पठित्वा गोपादाभ्यां प्रणामं कुर्वन्तु।

श्लो॥
गावो समग्रतास्सन्तु, गावो मे सन्तु प्रस्थितः।
गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम्॥

श्लो॥
प्रभु ईश्वर! देवी! सर्वदेवैरलङ्कृते।
मात र्ममाभिलाषितं सफलं कुरु नन्दिनी॥

प्रदक्षिणं नमस्कारः

(त्रिवारं (वामतः दक्षिणतः) गोपरितः गत्वा प्रणामं कुरु)।

॥श्लो॥
गां दृष्ट्वा तु नमस्कृत्य कुर्याच्चैव प्रदक्षिणम्।
प्रदक्षिणीकृता येन सप्तद्वीपा वसुन्धरा।

॥श्लो॥
मातरः सर्वभूतानां गावः सर्वसुखप्रदाः।
वृद्धिमाकाङ्क्षता नित्यं गावः कार्यः प्रदक्षिणः॥
श्रीगोमात्रे नमः प्रदक्षिण नमस्कार समर्पयामि।

नमस्कार

॥श्लो॥
क्षीरोदार्णवसम्भूते! सूर-सूर नमस्कृते।
मात र्ममाभिलषितं सफलं कुरु नन्दिनी!

॥श्लो॥
देहस्थयचरुद्राणि शंकरस्य सदाप्रिय।
धेनुरूपेण स देवी मम शान्तिं प्रयच्छतु॥
श्रीगोमात्रे नमः नमस्कारान् समर्पयामि।

(ततः पुष्पाणि अक्षतान् हस्ते स्थापयित्वा तस्मिन् त्रीणि उद्धरणानि जलं पातयित्वा निम्नलिखितवाक्यं वदन् नलके पातयन्तु।)

"अनया ध्यानावाहनादि षोडशोपचारपूजया।
मातासौरभेयी प्रीणातु।"

"सर्व श्रीकृष्णार्पणमस्तु"

"लोका। स्समस्ता सुखिनो भवन्तु"

ॐ शांतिः शान्तिः शान्तिः!

(गौः ततः चरणाय त्यक्तव्यः)।

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

श्लो.१५.

वृद्धिं प्राप्तं मत्कचेतो गुहायां
हर्तुं शक्यं यन्न तेजोऽन्तरेण।
अज्ञानाख्यं हन्तु तन्मेऽन्धकारं
शेषक्ष्माभृन्मौलिमाणिक्यदीपः॥

ता - मदीयं मानसम् एकं गुहारूपम्। तस्मिन् प्रभूतम् अन्धकारं निबिडतया व्याप्तम् आसीत्। तच्च तेजोद्रव्येण विना अन्येन अपनेतुं न शक्यते। तादृशं प्रगाढं मे अज्ञानरूपं तिमिरं शेषाद्रिशिखरे प्रकाशमानः श्रीनिवासाख्यः माणिक्यदीपः निजप्रभाप्रसारेण अपनुदतु।

सु.सौ.व्याख्या - पूर्वश्लोके कल्पवृक्षरूपेण सन्नुतः शेषाद्रिनाथः अत्र शेषशैलशिखरे विराजमानो माणिक्यदीप इति प्रस्तूयते। लोके प्रभातिमिरयोः विरोधः प्रसिद्धः। यदा यत्र तमोऽवतिष्ठते तदा तत्र प्रकाशे प्रसरति सति सद्य एव ततस्तमोऽपगच्छति नश्यति च। तथैवात्र मनोगुहायां गाढान्धकारः परिव्याप्य तिष्ठति। स च अन्धकारः अज्ञानमेव। एतच्च अज्ञानरूपं तमिस्रं सामान्यकान्त्या न अपनुद्यते। तच्च केवलं शेषाचलविभोः अनुग्रहेणैव दूरीक्रियते। शेषाद्रिपतिरेव अत्र रत्नदीपः। तस्य निरन्तरा निरतिशया करुणा एव मणिदीप्तिः। तथा मानसिकं अज्ञानाख्यं तमो नाश्यताम् इति प्रार्थ्यते।

अत्र इदं भगवद्वचनम् अनुसन्धेयम् -

''तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ भ.गी.१०.११

भक्तेषु अनुग्रहेण तदन्तर्यामी भूत्वा तेषाम् अज्ञानन्धकारं ज्ञानदीपप्रकाशेन नाशयामि-इति॥ पूर्वश्लोकवत् शालिनीवृत्तमिदम्॥

(अनुवर्तिष्यते)





(तदनन्तरम्)

दशरथः ध्यानमग्नः। एवं कालं याप्यन् अस्ति। एकदा महाध्वनिः श्रुता। दशरथं वंशाभिवृद्धिरस्तु इति ब्रह्मादि देवाः वरं दत्तवन्तः। तदा महती तेजोराशिः आविर्भूतः। देवाः अपि तत्तेजः द्रष्टुं अशक्ता बभूवः। तेजोस्थम्भमदये पञ्चवर्ण -युक्तं दिव्यं नगरं तन्मध्ये दिव्यविमानं दृष्टवान्। अगस्त्यादि-मुनिवृन्दैः सह वाणीवल्लभः गतवान्। दशरथोपि तेन सह गतवान्। तेजोस्थम्भस्य प्राग्दिशि तेन क्रीडामण्डपे रत्नखचित-सुवर्ण सिंहासने पद्मपीठे आसीनः अम्बुजाक्षः चन्द्राननः चतुर्बाहुः श्रीवत्साङ्कितवक्षसः गरुडादिभिः सेव्यमानः विश्वक्सेन परिवेष्टितः श्रीभूनीळा सहितः श्रीमन्नारायणः दृष्टः। सर्वेऽपि नमो नारायणायेति नामोच्छरन्तः अहो भाग्यमिति स्वभाग्यं श्लाघयन्तः दर्शनं कृतवन्तः।

तान् सर्वान् दृष्ट्वा परमदयालु श्रीहरिः चतुरास्यं "हे वनजगर्भ! ब्रूयात् तवागमन कारणं" इत्युक्तवान्। नमस्कुर्वन् वाणीवल्लभः "हे देवदेव! दीनबन्धो। शरणागतार्त परित्राण परयाण नारायण। पूर्वं विश्रवसः पुत्रः रावणः घोरं तपः कृतवान्। तपःप्रभावात् रावणाः सुरासुरयक्षगन्धर्वोरगकिन्नरकिं - पुरुषसिद्धसाध्यगरुडादिगणैः मृत्युर्नभवेत् इति वरं प्राप्तवान्। मानवाः अल्पाः इति मत्वा सः वरं पृच्छन् मानवस्य उल्लेखनं न कृतवान्। मया आत्मरक्षणार्थं दत्तं वारं सः साधुपीडनं धर्मनाशनं इत्यादिकार्यार्थम् उपयुनक्ति।

दशग्रीवः पृथिव्यां सनातनम् आर्षं च अतिक्रम्य अधर्मं करोति। एवं ब्रह्मणोक्तं सर्वं श्रुत्वा केशवः अगस्त्यं "हे महामुने! वदागमनकारणं" इत्युवाच। श्रुत्वा अगस्त्यः "हे




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

आत्मबन्धो! धर्मरक्षक! मर्त्यलोके रावणः सर्वान् पीडयन् अस्ति। सः वेदोक्तं तिरस्कृत्य स्वेच्छया प्रवर्तते। शम्भुना दत्तं प्रचण्डं वरं प्राप्य इतोऽपि दुष्कार्यं करोति। इदानीं भवतः रक्षणं अस्माभिः अपेक्षितम्। अतः रावणो हन्तव्यः" इति देवाः मुनयोऽपि उक्तवन्तः। अगस्त्यवचनं शृण्वन् आदिनारायणः सनकसनन्दनसनत्कुमारादिसिद्धान् दृष्टवान्। तान् आगमनकारणं पृष्टवान्। सनकादि सिद्धाः ऊचुः "हे स्वामिन्! वयं नित्यं आत्मना भवतः स्वरूपं दृष्ट्वा नित्यम् आनन्दम् अनुभवामः। परन्तु यत् रूपं योगिपथानुगम्यं यत् रूपं सर्वतो दीप्तिमन्तं यं रूपं अनादिरनन्तं निरञ्जनं सनातनं तमेव रूपं अनेनैव कर्मचक्षुषा द्रष्टुं इच्छामः अतः अत्र तदेव आगताः।"

दृष्ट्वा सहस्राक्षं इन्द्रं "किं तवागमनकारणम्?" इति श्रीहरिः पृष्टवान्। श्रीहरिं भूयो भूयो प्रणम्य एवं प्रत्युवाच "हे कमलाक्ष! ऋषिभिरुक्तं सर्वं सत्यमेव। हे देवेश जगन्निवास। हे कृष्ण! त्वमस्य विश्वस्य परमनिधनम्। लोके सर्वे धर्मभ्रष्टाः जाताः। चतुर्दशभुवनेषु रावणः स्वाधिकारं स्थापयति। मानवान् पीडयति। सर्वे कुलभ्रष्टाः अभवन्। स्त्रीषु अपि दुष्टप्रवृत्तिर्जाता। सर्वे स्वस्वकार्येषु विरक्ताः अभवन्। राक्षसाः ऋषिभिः क्रियमाणयज्ञेषु विघ्नान् उत्पादयन्तः सन्ति। ब्राह्मणास्तेन हताः। रावणसंहारार्थं भवान् एव समर्थः अतः तं राक्षसं हत्वा अस्माकं क्लेशं निवारयतु। पुनः धर्मं स्थापयतु। अतः एव वयं सर्वेऽपि त्रिषु लोकेषु विद्यमानाः सर्वेषु स्थानेषु अन्वेषयन्तः स्मः अस्माकं भाग्यविशेषात् अत्र समागताः अन्ततः भवतः दर्शनं प्राप्तम्। सामान्यैः द्रष्टुं बहुदुर्लभं भवतः पादारविन्ददर्शनं प्राप्तम्। रावणस्य संहारं कुरु। धर्मस्य रक्षणं कुरु। केशव। रावणो हन्तव्यः, इयमेव ममापि प्रार्थना अस्ति। भवान् वैकुण्ठवासी परन्तु भवतः शेषाचलवासस्य कारणं ज्ञातुं वयमसमर्थाः। एतादृशदुर्गमक्षेत्रे भवतः निवासं किमर्थं इति न जानीमहे। भवान् कृपया कर्तव्यं पालयतु रावणं मारयतु इति अस्माकं प्रार्थना। हे नारायण! भवान् स्थितिकारक अतः लोकरक्षणं दुष्टशिक्षणं कर्तव्यम्। भवान् कृपया कर्तव्यं पालयतु रावणं मारयतु इति अस्माकं प्रार्थना।"

(अनुवर्तिष्यते)

**कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम्।**
**वासुदेवं जगद्योनिं नौमि नारायणं हरिम्।।**

श्रीरामस्य जन्मदिनं पुरस्कृत्य श्रीरामनवमीपर्वदिनमिव श्रीकृष्णस्य जन्मदिनोत्सवसन्दर्भं पुरस्कृत्य पर्वदिनं जन्माष्टमीति व्यवहरन्ति। कृष्णस्य बाल्ये गोकुले वर्धमानत्वात् गोकुलाष्टमीत्यपि दिनमेतत् व्यवहरन्ति। कृष्णाष्टमी, कृष्णजयन्ति, श्रीजयन्तीत्यपि नामानि वर्तन्ते। श्रावणकृष्ण-बहुलाष्टमी एव कृष्णाष्टमीपर्वदिनम्। भारते निर्वाह्यमानानेकेषु पर्वदिनेषु कृष्णाष्टमी अतीव प्रमुखं पर्वदिनम्। श्रीकृष्णः द्वापरकलियुगसन्धिकाले शुक्लसंवत्सरे श्रावणमासे बहुल - -पक्षे रोहिणीनक्षत्रयुक्ताष्टम्यां द्वियामानन्तरं रात्रौ कारागारे देवकीगर्भाज्ञातः।

कृष्णाष्टमीदिने तिलामलकपिष्टेन शरीरलेपनं कृत्वा स्नानमाचरणीयम्। तुलसीदलमिश्रितजलेन आचमनं कर्तव्यम्। उपवासेन कालः यापनीयः। सायंसमये गृहमध्ये जलसिक्तगोमयं विकीर्य रङ्गवल्ली रचनीया। ततस्तत्र तण्डुलानि निक्षिप्य मण्डपं निर्मीय नूतनकुम्भः स्थापनीयः। नवमृत्कुण्डः गन्धपुष्पाक्षताभिः अलङ्करणीयः। कुण्डस्य वस्त्राच्छादनं कर्तव्यम्। कलशे बालकृष्ण- प्रतिमानं प्रतिष्ठाप्य। आदौ देवकी प्रार्थना, ततः कृष्णप्रार्थना कर्तव्या। अर्धयामपर्यन्तं पूजायां क्षीरदधिघृतनैवेद्यसमर्पणं कर्तव्यम्। चन्द्रोदयसमये बहिरागत्य अलङ्कृत्य भूमौ फलपुष्पचन्दनसंयुतशङ्खेन उदकं गृहीत्वा चन्द्रय अर्घ्यं प्रदेयम्। ततः शङ्खेन नारिकेलोदकं गृहीत्वा श्रीकृष्णाय अर्घ्यं देयम्। तस्यां रात्रौ कृष्णकथाभिः जागरणं कृत्वा अनन्तरदिने एव भोजनं भोक्तव्यम्।

**व्रताचरणविधानम् -**

अस्मिन् व्रते उपवासपूजा जागरणानि प्रधानानि भवन्ति। आस्तिकेन मानवेन ऐहिकव्यापारकर्माणि परित्यज्य नदी - स्नानमाचर्य मन्त्रजपं कृत्वा पूजापरिकरान् यावच्छक्ति सम्पाद्य श्रीकृष्णदेवकीवसुदेवनन्दयशोदाबलरामादीनां प्रतिमाः मृण्मयाः अथवा चित्रमयाः सम्पाद्य पीठे स्थापयित्वा गणपतिपूजा प्राणप्रतिष्ठापूर्वकं पुरुषसूक्तविधानेन परिवारसहितश्रीकृष्ण परमात्मने सहस्रनामपूजावश्यकनिवेदनादीनि सूर्योदयपर्यन्तं निर्वाहणीयानि। माषैः शर्करामिश्रितं कायं कृत्वा देवक्याः निवेदनं कर्तव्यम्। भागवतपुराणश्रवणभजनादिभिः जागरण कर्तव्यम्। कृष्णजननकाले चन्द्राय अर्घ्यं देयम्। पश्चाद्दिने भगवत्पूजा पूर्वकं अन्नदानानन्तरं पारणं कृत्वा व्रतपरिसमाप्तिः कर्तव्या। अस्मिन् दिने केवलं बालकृष्णग्रहायैव पूजा कर्तव्या। माषैरेव शर्करामिश्रितं काचमेर - नैवेद्यं देयम्। कृष्णबाल्य चेष्टाः अनुकृत्य उत्सवाः निर्वाह्याः।



# कृष्णाष्टमी

- आचार्य जी. पद्मनाभम्
चरवाणी - ९२४७३२८२८६



अद्य श्रीकृष्णगाथासम्बन्धस्थलानि पवित्रपुण्यक्षेत्राणि यात्रास्थलानि जातानि। श्रीकृष्णः बाल्ये सप्तमवर्षे एव गोवर्धनपर्वतं उद्धृतवान्। अस्य चोरत्वादिबाल्यकृत्यानि पूर्वजन्मवरप्राप्तगोपिकाबृन्दयशोदादीनां आनन्दाय कृताः बाल्यचेष्टाः एव। आन्ध्रदेशे सायंसमये श्रीकृष्णविग्रहं रथे संस्थाप्य यात्रां कुर्वन्ति। केचित् कृष्णलीलाः गायन्ति। कृष्णचरित्रे अष्टमसंख्यायाः प्रामुख्यं दृश्यते। कृष्णजन्मतिथिः अष्टमी तिथिः। दशावतारेषु कृष्णावतारः अष्टमः। कृष्णः वसुदेवस्य अष्टमपुत्रः। कृष्णस्य प्रधानमहिषीनां संख्यापि अष्टैव। देवक्याः अष्टमगर्भादुत्पन्नः कृष्णः आत्मसंहरणाय कृतप्रयत्नान् कंस, पूतना, शकटासुर, तृणावर्त, वत्सासुर, अघासुरान् जघान। विषात् जनहन्तारं कालीयमर्दनं चकार। दशवतारेषु कंसपूतनाशकटासुरतृणावर्तवत्सासुरअघासुरान् कुरुक्षेत्रयुद्धे धर्मपक्षपाती धर्मानुवर्तिभ्यः पाण्डवेभ्यः उपकृत्य धर्मरक्षणञ्चकार कर्मभक्तिज्ञानमार्गबोधकश्रीकृष्णगीतोपदेशः मोक्षप्राप्तये सर्वदा सर्वेभ्यः उपकरोति। दशावतारेषु कृष्णावतारः पूर्णावतारः। ''यदा यदा हि धर्मस्य'' इति गीतोक्तश्लोकरीत्या दुष्टशिक्षणशिष्टरक्षणं कृत्वा अन्ते केनचित् जरनामक पुरुषेण हरिणभ्रमात् प्रयुक्तेन बाणेन पादाविद्धः श्रीकृष्णः त्यक्तप्राणः अवतारसमाप्तिं प्राप्य वैकुण्ठं जगाम।

**दधिकुम्भभञ्जनक्रीडा - (उट्टिक्रीडा)**

कृष्णाष्टम्याः पर्वदिन सायंकाले 'उट्टिकुम्भभञ्जनक्रीडा' बालैः निर्वाह्यते। महानन्दजनकक्रीडेयं श्रीकृष्णस्य बाल्यदधि-चौर्यक्रीडां स्मारयति। प्रसिद्धवीथीषु द्वयोः पार्श्वयोः त्रिंशत् (३०) पाददीर्घ मध्ये द्वौ स्तम्भौ विंशतिपादोन्नतौ स्थापयन्ति। उभयोः स्तम्भयोः उपरि तिर्यक्दारूस्तम्भमेकं बन्धयन्ति। ततः तिर्यक्स्तम्भ मध्यभागे वृत्ताकारगिलकचक्रमेकं बन्धयन्ति। एकस्य दधिकुम्बस्य कण्ठभागे दीर्घरज्जुं बद्ध्वा उपरिविद्यमान तिर्यक्स्तम्भगिलकचक्रपर्यन्तं रज्जुं आकर्षति। उपरि रज्वाकर्षणसमये यः कोपि निपुणः बालकः उल्लंघ्य रज्जुबद्धं दधिकुम्भं भञ्जयति चेत् सः विजेता स्यात्। रज्वाकर्षणसमये दूरात् रज्वाकर्षणबालकोपरि पिचिकारी यन्त्रद्वारा जलं पातयन्ति। बहवः बालकाः अस्यां क्रीडायां भागस्वामिनः भूत्वा विजयाय यत्नं कुर्वन्ति। महानन्दजनकेयं मृत् कुम्भदधिभञ्जनक्रीडा।

**करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तं।**
**वटस्य पत्रस्य पुटे शायानं बालं मुकुन्दं मनसा स्मरामि॥**
**वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।**
**देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्॥**



## जून् - २०२४
## लघुप्रश्नोत्तरी समाधानानि

१. वाल्मीकिना
२. वेदव्यासेन
३. कालिदासः
४. बाणेन
५. वाली
६. रावणः
७. विष्णोः
८. मैनाकः
९. ऊर्मिळा
१०. लवकुशौ
११. अभिमन्युः
१२. कृष्णा
१३. मयः
१४. कर्णः
१५. घटोत्कचः

चित्रकथा

# किमपि पुरतः दूरदर्शिता भवितुमर्हति

तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

एकदा दशररथस्य कुलगुरुः अयोध्यायाः स्थितिं समीक्षति।

दशरथ महाराज! शनिः रोहिणी नक्षत्रे प्रविशन् अस्ति। एतद् द्वारा द्वादश वर्षाणि अनावृष्टिः भविष्यति। प्रजानाम् अन्नवस्त्राणि न भविष्यन्ति।

एतद् दुर्भिक्षस्य निवारणोपायः नास्ति वा?

महाराज! कष्टागमनात् परं उपशमनाय प्रयत्नः अविवेकः। कष्टागमनात् पूर्वमेव निवारणोपायः त्वया कर्तव्यः।

तर्हि... महावरुणयागं करोमि चेत् सम्यक् भवति

रोहिणीग्रस्तशनिः सामान्यग्रहः नास्ति। यागाः, यज्ञाः तं न अवरोधयन्ति।

तर्हि मया किं करणीयम् इति वदन्तु।

शनैश्चरस्य रोहिणीमण्डलप्रवेशः निरोधनीयः।

अहो! तत् कथं साध्यं भवति?

ग्रहनक्षत्रमण्डलं गच्छ। प्रार्थनां कुरु। न श्रुणोति चेत् विरोधं कृत्वा अपि साधय।

दशरथः रोहिणी नक्षत्रमण्डलस्य बहिः एव शनैश्चरस्य मार्गे रथं स्थापितवान्।

शनैश्चर! प्रणामाः।

रथस्य अपसरणं कृत्वा तव प्रणामान् अर्पय।

महात्मन्! रथस्य अपसरणार्थम् मार्गे न स्थापितवान्। भवतः निरोधनार्थमेव रथं मार्गे स्थापितवान्।


दशरथ! केन भाषसे? मा जानासि खलु। यदि मम गमनाय अवरोधं करोषि तर्हि प्रलयमेव।
देव! शान्तम्! भवान् रोहिणी नक्षत्र मण्डले प्रविशति चेत् वयं कष्टम् अनुभवामः। कृपया तिरोगमनं कुरु।


ह! ह! ह! तिरुगमनं वा! मम पुरतः एव गन्तव्यम् अपसर।


स्वामिन्! अस्माकं स्थितिं तत उक्तवान्। यदि भवान् मनःपरिवर्तनं न करोषि चेत् विरोधमेव।


सामान्यमानवः तव अस्य ग्रहदेवेन सह विरोधः वा?


दशरथः बाणं शनैश्चरोपरि सारितवान्।
'भूलोकवासिनां प्राणरक्षणाय अस्य कार्यम् अनिवार्यम्।


स्तग दशरथ स्तग! अस्त्र उपसंहरणं कुरु। तव विन्नपं स्वीकरोमि। तव मनोधैर्यस्य परीक्षणं कर्तुं तव प्रार्थनां प्रथमं तिरस्कृतवान्। तव किं वरं आवश्यकं पृच्छ।


शनैश्चर! धन्योस्मि। अद्यप्रभृति भवता कदापि रोहिणीनक्षत्रमण्डले प्रवेशः न करणीयः।
तथैव दशरथ! अहं कदापि रोहिणीनक्षत्रमण्डले न प्रविशमि।


दशरथः अञ्जलिं दत्वा शनैश्चरं स्तूयते।
दशरथ! भवान् यत् स्तोत्रम् उक्तवान् दशरथ कृत शनि स्तोत्रम् नाम ददामि। भक्तिश्रद्धया अस्य दशरथस्तोत्रपठनं ये कुर्वन्ति तेषां ग्रहपीडा न भविष्यति।
धन्योस्मि महात्मन्! धन्योस्मि।

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा
ल
वि
नो
दि
नी







१. गोकुलाष्टमी
२. राखीपौर्णिमा
३.वरलक्ष्मीव्रतम्

उचित समाधान सङ्ख्या कोशे लिखन्तु।

मेलनं वा निष्कासनं कृत्वा ७ सङ्ख्या यत्र आगच्छति तस्मिन् मार्गे गच्छति चेत् भगिनी, भ्रातृ समीपं गन्तुं शक्नोति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 5 +2 | 9 −2 | 19 −12 | 8 −2 | 13 +5 | 14 −7 | 2 +5 | 8 −3 |
| 10 −5 | 2 +3 | 10 −3 | 12 −5 | 4 +3 | 22 −15 | 18 −11 | 19 −2 |
| 16 +4 | 15 −2 | 18 −9 | 10 −5 | 15 −8 | 6 +1 | 1 +6 | 19 −2 |
| 15 +2 | 27 −2 | 8 +3 | 13 +2 | 13 −6 | 25 −18 | 19 −12 | 0 +7 |

सम्यक् चित्रं योजयत

१.बालमुरली
२.शेषगिरि





तिरुमलतिरुपतिदेवस्थानानि

## प्रदर्शमान

सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे.
पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

## सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि
आध्यात्मिक
सचित्र
मासपत्रिकायाः
कृते
शुल्कं दत्वा



श्रीनिवासस्य
अक्षरप्रसादं
प्रतिमासम्
अनुभूयन्तु





# सप्तगिरिः

## आध्यात्मिक सचित्र मास पत्रिका

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०
वार्षिक ग्राहकत्वम् रू/- २४०
आजीविक ग्राहकत्वम् रू/- २४००
(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

For details: Chief Editor, Sapthagiri Magazine
2nd Floor, TTD Press,
K.T.Road, Tirupati - 517507.
Ph. 0877- 226 4543, 226 4359, Editor: 226 4360.

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

# भक्तानां सेवायां ति.ति.दे., कार्यनिर्वहणाधिकारी



प्रयाणेषु बहूनि प्रयासान् प्राप्य तिरुमलक्षेत्रमागतभक्तानां कृते सुक्षितआवासः परिकल्पनीयः इति सदाशयेन तिरुमल नारायणगिरि आवासानां नारायणगिरिउद्यानवनेषु स्थित क्यू लैन इत्यादीनां निरीक्षणं कृतवन्तः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री जे.श्यामल राव् ऐ.ए.एस्., ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारिणः श्रीमति एम्. गौतमी ऐ.ए.एस्., (विद्या & वैद्यः), श्री वीरब्रह्मम् ऐ.ए.एस्.।



तिरुमलप्रसादं नाम मोदकमेव। भक्ताः सर्वे अत्यन्तपवित्रेण स्वीकृतमोदकप्रसादं यत्र सञ्चीकृतं भवति तत्र 'पोटु' मध्ये गत्वा तस्य परिशीलनं कृतवन्तः ति.ति.दे., कार्यनिर्वहणाधिकारी श्री जे.श्यामल राव्, ऐ.ए.एस्., सम्युक्त कार्यनिर्वहणाधिकारिणी (विद्य&वैद्य) श्रीमति एम्.गौतमी ऐ.ए.एस्.।



स्वच्छया रुचिकरैः श्रीस्वामिनःअन्नप्रसादं सुधारं कर्तुं सदद्धेश्येन मातृश्री तरिगोण्ड वेङ्गमाम्बा अन्न प्रसाद समुदायान् निसितरूपेण परिशीलितवन्तः ति.ति.दे. कार्यनिर्वहणाधिकारी श्री जे.श्यामल राव् ऐ.ए.एस्., सम्यक्त कार्यनिर्वहणाधिकारि श्री वीरब्रह्मम्, ऐ.ए.एस्,.।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY
TIRUMALA TIRUPATI DEVASTHANAMS PRINTING ON 25-07-2024 & posting at Tirupati
RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal
Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT
No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

वसुदेवसुतं देवं कंसचाणूरमर्दनम्।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्।।

कृष्णाष्टमी - 27-08-2024

Artist
BALAJI SRINIVASAN
Chennai